आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३४

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता—

# श्रीमद्भगवद्गीता ।

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

( विषयानुक्रम–श्लोकानुक्रम–शब्दवर्णानुक्रमादिभिः सनाथीकृता च ) ।

एतत्पुस्तकं

वे० शा० सं० रा० आगाशे इत्युपाह्वैः काशीनाथशास्त्रिभिः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

## विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८५८ ।

खिस्ताब्दाः १९३६ ।



मूल्यं सपादरूपकषट्कम् ( ६४ ) ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

श्रीमद्भगवद्गीतायाः पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं मद्दत्तानि तेषां नामग्रामादिकं पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

१ क. इति संज्ञितम्—सटीकभाष्योपेतम् । पुण्यपत्तनस्थे जगद्धितेच्छुनाम्नि मुद्रणालये मुद्रितम् ।

२ ख. इति संज्ञितम्—सटीकभाष्योपेतम् । पुण्यपत्तनस्थानां साठे इत्युपाह्वानां कै० रा० रा० 'गोपाळराव' इत्येतेषाम् ।

३ ग. इति संज्ञितम्—सटीकभाष्योपेतमपूर्णम् । रा० रा० "मल्हारराव पुरंदरे" इत्येतेषाम् ।

४ घ. इति संज्ञितम्—केवलभाष्यसमेतम् । श्रीयुतानां किबे इत्युपाह्वानां इन्दूरपुरनिवासिनां रा० रा० "भाऊसाहेब बाळासाहेब" इत्येतेषाम् । अस्य लेखनकालः—संवत् १८१३ ।

५ ङ. इति संज्ञितम्—केवलटीकाया एव । श्रीयुतानां रा० रा० 'मोरोबादादा फडणवीस' इत्येतेषाम् ।

६ च. इति संज्ञितम्—सटीकभाष्योपेतमपूर्णम् । साठ्ये इत्युपाह्वानां रा० रा० "रामचन्द्र हरि" इत्येतेषाम् ।

७ छ. इति संज्ञितम्—केवलभाष्यसहितमपूर्णम् । कै० रा० रा० 'बाळासाहेब देव' इत्येतेषाम् ।

८ ज. इति संज्ञितम्—केवलटीकाया एव । पुण्यपत्तनस्थानां रा० रा० भाऊसाहेब नगरकर इत्येतेषाम् ।

९ झ. इति संज्ञितम्—केवलभाष्यसहितमेव । श्रीयुतानां रा० रा० 'मोरोबादादा फडणवीस' इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

# अथ श्रीमद्भगवद्गीताश्लोकान्तर्गतविषयाणामध्यायक्रमेणानुक्रमणिका ।

## १ कर्मसंन्यासात्मकसाधनप्रधाना त्वंपदार्थप्रधाना चाऽऽद्या षडध्यायी ।


| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| **प्रथमोऽध्यायः ( १ )** | |
| संजयं प्रति धृतराष्ट्रकृतप्रश्नः | १ |
| संजयस्य धृतराष्ट्रकृतप्रश्नोत्तरारम्भः | २ |
| युद्धसाहाय्यार्थं दुर्योधनकृता द्रोणाचार्यप्रार्थना | ३—११ |
| दुर्योधनसंतोषार्थं भीष्मादिकृतशङ्खवादनम् | १२—१३ |
| स्वसैन्यप्रोत्साहनार्थं कृष्णार्जुनादिकृतं शङ्खवादनम् | १४—१८ |
| पाण्डवकृतशङ्खवादनेन धार्तराष्ट्रहृदयव्यथा | १९ |
| युद्धार्थमवस्थितान्धार्तराष्ट्रानवलोक्य विशेषतो युद्धभूमिस्थितयोद्धृदर्शनार्थं श्रीकृष्णं प्रत्यर्जुनकृता सेनाद्वयमध्ये रथस्थापनप्रार्थना | २०—२३ |
| सेनाद्वयमध्ये श्रीकृष्णकृतस्य रथस्थापनपूर्वकसंभाषणस्य धृतराष्ट्रं प्रति संजयोक्तिः | २४—२५ |
| युद्धभूमौ पित्रादीन्दृष्ट्वाऽर्जुनस्य विषादः | २६—२७ |
| श्रीकृष्णं प्रत्यर्जुनस्य विषादप्रदर्शिकोक्तिः | २८—४६ |
| शोकाकुलस्यार्जुनस्य चापबाणौ त्यक्त्वा रथोपस्थे प्रवेशनम् | ४७ |
| **द्वितीयोऽध्यायः (२)** | |
| संजयवचनम् | १ |
| विपदि दैन्यमर्जुनं प्रति युद्धप्रवर्तनार्थं श्रीकृष्णकृता विषादनाशिकोक्तिः | २—३ |
| अर्जुनस्य श्रीकृष्णं प्रति गुर्वादिभिः सह युद्धस्याकरणमिति कथनपूर्वकं युद्धकरणाकरणयोर्मध्ये श्रेयोनिश्चयार्थं शिष्यत्वेनोपसत्तिः | ४—८ |
| संजयोक्तिः | ९—१० |
| अर्जुनस्य शोकमोहापनयनार्थं श्रीकृष्णकृता संसारनिवर्तकात्मतत्त्वज्ञानस्योक्तिः | ११—३० |
| युद्धस्य क्षत्रियधर्मत्वेन कार्यत्वकथनम् | ३१ |
| युद्धस्य स्वर्गप्रदत्वकथनम् | ३२ |
| स्वधर्मभूतयुद्धकरणाभावे स्वधर्मकीर्त्योर्हत्या पातककथनम् | ३३ |
| संभावितस्य मरणादप्यकीर्तेर्दुःखदत्वप्रदर्शनम् | ३४ |
| भयाद्युद्धान्निवृत्त इत्यादिनिन्दावचनश्रवणेनात्यन्तं दुःखं स्यादिति कथनम् | ३५—३६ |
| युद्धमरणे स्वर्गप्राप्तेर्जये वा महीप्राप्तेः सत्त्वाद्युद्धकरणकृतनिश्चयो भवेत्युक्तिः | ३७ |
| जयाजययोः समबुद्ध्या युद्धकरणे दोषाभावकथनम् | ३८ |
| आत्मतत्त्वज्ञानकारणस्य निष्कामकर्मानुष्ठानस्य समाधियोगस्य च निरूपणम् | ३९—५३ |
| अर्जुनकृतः स्थितप्रज्ञलक्षणविषयकः प्रश्नः | ५४ |
| स्थितप्रज्ञलक्षणकथनम् | ५५—५८ |

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| इन्द्रियाणां विषयेभ्यो वैमुख्येऽपि तद्विषयरागानुवृत्तौ कथं प्रज्ञालाभः स्यादिति शङ्कायामुत्तरम् | ५९ |
| यतमानस्य विपश्चितोऽपीन्द्रियाणि मनो हरन्तीति कथनम् | ६० |
| इन्द्रियाणि संयम्य यो युक्त आस्ते तस्य प्रज्ञास्थैर्यं भवतीति कथनम् | ६१ |
| विषयध्यानेन सङ्गादिद्वारा प्रणाशकथनम् | ६२—६३ |
| मोक्षकारणकथनम् | ६४—६५ |
| अशान्तस्य सुखाभावकथनम् | ६६ |
| अजितेन्द्रियाणां मनः प्रज्ञां हरतीत्यत्र दृष्टान्तकथनम् | ६७ |
| जितेन्द्रियस्य प्रज्ञास्थैर्यकथनम् | ६८ |
| सर्वभूतनिशायां परमार्थतत्त्वलक्षणायां योगी जागर्तीति कथनम् | ६९ |
| विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्न त्वसंन्यासिन इत्यत्र दृष्टान्तप्रतिपादनम् | ७० |
| सर्वकामत्यागिनः पुरुषस्य शान्तिप्राप्तिनिरूपणम् | ७१ |
| ज्ञाननिष्ठास्तुतिः | ७२ |

## तृतीयोऽध्यायः (९६)

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| ज्यायसी चेत्कर्मणस्ते इत्यादिरर्जुनस्य प्रश्नः | १—२ |
| कर्मयोगज्ञानयोगयोर्भिन्नाधिकारिकत्वकथनम् | ३ |
| अनात्मज्ञस्य कर्मयोगावश्यकत्वप्रतिपादनम् | ४—१६ |
| आत्मज्ञस्य कर्मयोगानावश्यकत्वप्रतिपादनम् | १७—१८ |
| अर्जुनस्य कर्मणि फलासक्तिं त्यक्त्वा स्वधर्मे प्रवर्तनम् | १९—३५ |
| अर्जुनकृतः पापाचरणप्रवृत्तिहेतुविषयः प्रश्नः | ३६ |
| सर्वानर्थहेतुभूतकामस्य वैरित्वप्रतिपादनपुरःसरमिन्द्रियजयादिना नाशप्रतिपादनम् | ३७—४२ |

## चतुर्थोऽध्यायः (१३४)

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| उक्तस्य ज्ञानयोगस्य कृत्रिमत्वशङ्कानिवृत्तये वंशकथनपूर्विका स्तुतिः | १—३ |
| भगवति लोकस्यानीश्वरत्वशङ्कां निवर्तयितुमर्जुनप्रश्नः | ४ |
| अतीतानेकजन्मवत्त्वस्य सर्वप्राणिसाधारणत्वप्रदर्शनम्, स्वस्य तज्ज्ञानसत्त्वस्य प्रदर्शनम् | ५ |
| भगवतो जन्मस्वरूपतत्प्रयोजनयोरुक्तिः | ६—८ |
| श्रीकृष्णकृतं स्वदिव्यजन्मकर्मवेदनेन पुनर्जन्माभावकथनम् | ९ |
| पूर्वेषां ब्रह्मविदां मदुपेतमोक्षमार्गाचरणेनैव प्राप्तकैवल्यत्वनिरूपणम् | १० |
| श्रीकृष्णकृतं स्वस्य कामनानुसारेण फलप्रदातृत्वकथनम् | ११ |
| कर्मजसिद्धेः शीघ्रभावित्वेन सर्वेषां कर्मप्रवृत्तिकथनम् | १२ |
| चातुर्वर्ण्यसृष्टिकर्तुरपि भगवतस्तदकर्तृत्वबोधनम् | १३ |
| श्रीकृष्णकृतं स्वस्याकर्तृत्वज्ञानेनापि ज्ञातुः कर्मबन्धाभावकथनम् | १४ |
| नाहं कर्ता न मे कर्मफले स्पृहेति ज्ञात्वा कर्म कुर्वित्युक्तिः | १५ |
| कर्माकर्मकथनप्रतिज्ञा | १६ |
| कर्मणो दुर्विज्ञेयत्वकथनम् | १७ |
| कर्मादितत्त्वप्रदर्शनम् | १८ |
| कर्माकर्मणोः कर्माकर्मदर्शनस्तुतिः | १९—२३ |
| उक्तज्ञानस्य यज्ञत्वसंपादनम् | २४ |
| दैवयज्ञादिकथनपुरःसरं सर्वयज्ञेभ्यो ज्ञानयज्ञस्य श्रेष्ठत्वप्रतिपादनम् | २५—३३ |
| उक्तज्ञानस्य गुरुप्रणिपातादिना प्राप्तिकथनम् | ३४ |
| ज्ञानमाहात्म्यकथनम् | ३५—३८ |
| ज्ञानप्राप्त्युपायप्रदर्शनपूर्वकं ज्ञानहेतौ कर्मयोगेऽर्जुनस्य प्रवर्तनम् | ३९—४२ |

## पञ्चमोऽध्यायः (१८४)

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| ज्ञानरहितसंन्यासकर्मयोगयोर्मध्ये किं प्रशस्यतरमित्यर्जुनप्रश्नः | १ |

| विषयक्रमः | श्लोकाङ्कः |
| --- | --- |
| ज्ञानरहितसंन्यासात्कर्मयोगस्य हेतुयुतं प्रशस्यतरत्वकथनम् | २—३ |
| ज्ञानसहितसंन्यासकर्मयोगरूपयोः सांख्ययोगयोः फलैकत्वकथनम् | ४—५ |
| कर्मयोगं विना पारमार्थिकसंन्यासस्य दुःखफलकत्वकथनम् | ६ |
| सम्यग्दर्शने वर्तमानस्य लोकसंग्रहाय कर्म कुर्वतोऽपि तत्फलालेपत्वोपपादनम् | ७—१० |
| योगिनस्तत्फलालेपत्वे हेतुद्वयकथनम् | ११—१२ |
| विदुषः सुखेन देहस्थितिकथनम् | १३ |
| आत्मनः प्रभोः कारयितृत्वाद्यभावप्रतिपादनपुरःसरं स्वभावस्य कारयितृत्वादिप्रतिपादनम् | १४—१५ |
| ज्ञानिना ज्ञानेन ब्रह्मप्राप्तिप्रतिपादनम् | १६—१७ |
| ज्ञानिनो ब्राह्मणादौ समदर्शित्वकथनम् | १८ |
| ज्ञानिनां समदर्शित्वेऽपि दोषवत्त्वाभावप्रतिपादनम् | १९ |
| ब्रह्मणि स्थितस्य प्रियाप्रियप्राप्त्यापि हर्षोद्वेगरहितत्वकथनम् | २० |
| ब्रह्मणि स्थितस्य शब्दादिविषयेष्वसक्तस्याक्षयसुखावाप्तिकथनम् | २१ |
| विषयेभ्यः स्पर्शादीन्द्रियनिवर्तने कारणकथनम् | २२ |
| प्राक्शरीरपातात्कामक्रोधोद्भवं वेगं सोढुं समर्थस्यैव युक्तत्वसुखित्वयोः कथनम् | २३ |
| अन्तःसुखादिविशिष्टस्य ब्रह्मप्राप्तिकथनम् | २४—२६ |
| संक्षेपतो ध्यानयोगस्योपक्षेपः | २७—२८ |


### षष्ठोऽध्यायः ( २१० )


| विषयक्रमः | श्लोकाङ्कः |
| --- | --- |
| निष्कामकर्मयोगस्य सत्त्वशुद्धिद्वारा ध्यानयोगारोहणसाधनत्वात्स्तुतिः | १—२ |
| ध्यानयोगेऽवस्थातुमसमर्थस्य निष्कामकर्मयोगः समर्थस्य तु सर्वकर्मसंन्यास इत्युक्तिः | ३ |
| ध्यानयोगारूढलक्षणकथनम् | ४—९ |
| विस्तरेणाऽऽसनाहारविहारादिनियमकथनयुतं सफलध्यानयोगनिरूपणम् | १०—३२ |
| उक्तध्यानयोगस्य मनश्चाञ्चल्येन सुदुष्करत्वप्रतिपादकप्रश्नः | ३३—३४ |
| अभ्यासवैराग्याभ्यां मनोनिग्रहे ध्यानयोगसिद्धिकथनम् | ३५ |
| असंयतात्मना ध्यानयोगस्य दुष्प्रापत्वकथनम् | ३६ |
| ध्यानयोगे प्रवृत्तस्य त्यक्तसर्वकर्मणस्तत्फलसम्यग्दर्शनप्राप्तेः प्रागेव देहवियोगे का गतिरित्यर्जुनप्रश्नः | ३७—३९ |
| योगभ्रष्टस्य विनाशाभावप्रतिपादनपूर्वकमुत्तमगतिप्राप्तिप्रतिपादनम् | ४०—४५ |
| ध्यानयोगिनः सर्वश्रेष्ठत्वकथनपूर्वकं ध्यानयोगेऽर्जुनस्य प्रवर्तनम् | ४६ |
| रुद्रादित्यादिध्यानपराणां मध्ये वासुदेवध्यानपरस्य युक्ततमत्वबोधनम् | ४७ |


---

## २ उपास्यनिष्ठा तत्पदार्थनिष्ठा वा मध्यमा षडध्यायी ।

### सप्तमोऽध्यायः ( २३९ )


| विषयक्रमः | श्लोकाङ्कः |
| --- | --- |
| भगवद्ध्यानयोगं कुर्वतः समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नभगवज्ज्ञानप्राप्तिप्रकारोपदेशप्रतिज्ञा | १—२ |
| ज्ञानदुर्लभत्वप्रदर्शनम् | ३ |
| अपरप्रकृतेरष्टधाभिन्नत्वकथनम् | ४ |
| जीवभूतपरप्रकृतिकथनम् | ५ |
| उक्तप्रकृतिद्वयद्वारेणेश्वरस्य जगत्कारणत्वप्रदर्शनम् | ६ |

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| दृष्टान्तेन सर्वभूतानां परमेश्वरे ग्रथितत्वकथनम् | ७ |
| संक्षेपेण रसादिविभूतिकथनम् | ८—१२ |
| मूढानां त्रिविधसात्त्विकादिभावैर्मोहितत्वाद्भगवत्तत्त्वानभिज्ञतावर्णनम् | १३ |
| भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमकथनम् | १४ |
| दुष्कृतिनां भगवद्भजनपराङ्मुखत्वकथनम् | १५ |
| सुकृतित्वेन भगवद्भजनप्रवृत्तिबोधनपुरःसरं भक्तानां चतुर्विधत्वकथनम् | १६ |
| चतुर्विधभक्तेषु ज्ञानिनः श्रेष्ठत्वप्रतिपादनम् | १७—१९ |
| अन्यदेवताभजनेऽपहृतविवेकविज्ञानत्वहेतुकथनम् | २० |
| अन्यदेवतोपासकानां तत्तद्देवतोपासनश्रद्धादार्ढ्यकरणेन तत्तद्देवतास्वरूपिणो मत्त एव कामप्राप्तिरिति कथनम् | २१—२२ |
| अन्यदेवतोपासकानां फलस्यान्तवत्त्वकथनम् | २३ |
| परमार्थतत्त्वाज्ञाने हेतुकथनम् | २४—२७ |
| सुकृतिनां भगवद्भजनेनोत्तमगतिप्राप्तिकथनम् | २८—३० |

## अष्टमोऽध्यायः(२५७)

| | |
|---|---|
| किं तद्ब्रह्मेत्यादिप्रश्नसप्तकम् | १—२ |
| उक्तप्रश्नसप्तकस्योत्तरम् | ३—५ |
| अन्त्यभावानुसारेण देहान्तरप्राप्तिकथनम् | ६ |
| सर्वेषु कालेषु भगवद्ध्यानपूर्वकं युद्धादिकरणेऽर्जुनस्य प्रवर्तनम् | ७ |
| योगयुक्तचेतसः परमपुरुषावाप्तिकथनम् | ८—१० |
| प्रणवोपासनकथनम् | ११—१४ |
| ईश्वरं प्राप्तानामपुनरावृत्तिकथनम् | १५ |
| स्वर्गादिक्षयलोकान्तरं कगतानां सहेतुकं पुनरावृत्तिकथनम् | १६—१९ |
| परतत्त्वस्वरूपप्रदर्शनम् | २०—२१ |
| परपुरुषस्य ज्ञानलक्षणमभिलक्ष्यस्वकथनम् | २२ |
| ध्यानयोगिनां कर्मिणां च क्रमेण देवयानपितृयाणमार्गद्वयकथनम् | २३—२५ |
| शुक्लकृष्णमार्गद्वयगतानां क्रमेणानावृत्त्यावृत्तिकथनम् | २६ |
| मार्गद्वयचिन्तनफलम् | २७ |
| योगमाहात्म्यम् | २८ |

## नवमोऽध्यायः(२७७)

| | |
|---|---|
| गुह्यतमपरब्रह्मतत्त्वज्ञानोपदेशः | १-१० |
| श्रीकृष्णकृतं मूढकृतस्यावज्ञायाः स्वतत्त्वज्ञानाभावरूपकारणस्य कथनम् | ११—१२ |
| महात्मनां भगवद्भक्तिलक्षणमोक्षमार्गे प्रवृत्तिकथनम् | १३—१५ |
| संक्षेपेण विभूतिकथनम् | १६—१९ |
| सकामानां संसारप्राप्तिकथनम् | २०—२१ |
| निष्कामभक्तानां सम्यग्दर्शिनां भगवतो योगक्षेमप्रापकत्वनिरूपणम् | २२ |
| अन्यदेवताभक्तानामपि भगवद्भक्तत्वप्रतिपादनपूर्वकं भजनानुसारेण फलप्राप्तिकथनम् | २३—२५ |
| भगवदाराधनस्य सुकरत्वप्रतिपादनम् | २६ |
| भगवदाराधनेऽर्जुनस्य प्रवर्तनम् | २७—२९ |
| भक्तिमाहात्म्यप्रतिपादनपूर्वकमर्जुनस्य भक्तिमार्गे प्रवर्तनम् | ३०—३३ |
| ईश्वरभजनेतिकर्तव्यताप्रदर्शनम् | ३४ |

## दशमोऽध्यायः(२९८)

| | |
|---|---|
| संक्षेपतो भगवत्कृतविभूतियोगज्ञानोपदेशस्तत्फलकथनसहितः | १—११ |
| विस्तरेण विभूतियोगकथनार्थमर्जुनप्रश्नः | १२—१८ |
| विस्तरेण भगवत्कृतो विभूतियोगोपदेशः | १९—४२ |

## एकादशोऽध्यायः (३१५)

| | |
|---|---|
| विश्वरूपदिदृक्षयाऽर्जुनकृता भगवत्प्रार्थना | १-४ |
| पश्य मे पार्थेत्यादि भगवद्भाषणम् | ५—८ |

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| धृतराष्ट्रं प्रति संजयकृतं हरिः पार्थाय विश्वरूपं दर्शयामासेत्यादि भाषणम् | ९—१४ |
| भगवद्दर्शितविश्वरूपस्य स्वानुभव प्रकटीकरणार्थमर्जुनवाक्यम् | १५—३१ |
| स्वस्य भूभारहरणार्थं प्रवृत्तत्वम् मयैवैते हतास्त्वं निमित्तमात्रं भवेत्यादि श्रीकृष्णभाषणम् | ३२—३४ |
| पराजयभयात्स्करिष्यति संधिमिति बुद्ध्या संजयस्य धृतराष्ट्रं प्रति वृत्तान्तकथनम् | ३५ |
| अर्जुनकृता भगवत्स्तुतिः | ३६—४३ |
| पूर्वरूपप्रदर्शनार्थमर्जुनकृतभगवत्प्रार्थना | ४४—४६ |
| अर्जुनं भीतमुपलभ्य विश्वरूपमुपसंहृत्य प्रियवचनेनाऽऽश्वासनार्थं श्रीकृष्णोक्तिः | ४७—४९ |
| संजयभाषणम् | ५० |
| पूर्वरूपदर्शनेनार्जुनकृतं स्वचित्तस्थैर्यप्रदर्शनम् | ५१ |
| विश्वरूपदर्शनस्य भगवत्कृतं भक्त्येकसाध्यत्वप्रतिपादनम् | ५२—५४ |
| भगवदर्थकर्मादियुतस्य भगवत्प्राप्तिप्रतिपादनम् | ५५ |


## द्वादशोऽध्यायः (३४३)


| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| विश्वरूपोपासकानामक्षरोपासकानां च मध्ये केषां योगवित्तमत्वमित्यर्जुनप्रश्नः | १ |
| विश्वरूपोपासकानामक्षरोपासकानां च तारतम्यप्रतिपादनम् | २—७ |
| विश्वरूपध्यानरूपे भक्तियोगेऽर्जुनाय श्रीकृष्णकृतं प्रवर्तनम् | ८ |
| उक्तभक्तियोगेऽसमर्थस्याभ्यासयोगादिसाधनकथनम् | ९—११ |
| सर्वकर्मफलत्यागस्तुतिः | १२ |
| अद्वेष्टृत्वाद्यक्षरोपासकधर्मकथनम् | १३—१९ |
| श्रीकृष्णकृतमुक्तधर्मानुष्ठायिनां स्वस्यात्यन्तप्रियत्वनिरूपणम् | २० |


# ३ तत्त्वंपदार्थैक्यरूपवाक्यार्थनिष्ठा सम्यग्धीप्रधानाऽन्तिमा षडध्यायी ।

## त्रयोदशोऽध्यायः ( ३५६ )


| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| संक्षेपेण क्षेत्रक्षेत्रज्ञयोः स्वरूपकथनम् | १ |
| सर्वक्षेत्रस्थक्षेत्रज्ञस्येश्वराभिन्नत्वकथनपुरःसरं क्षेत्रक्षेत्रज्ञयोर्ज्ञानस्य स्वाभिमतज्ञानत्वकथनम् | २ |
| विशेषतः क्षेत्रक्षेत्रज्ञयाथात्म्यकथनप्रतिज्ञा | ३ |
| क्षेत्रक्षेत्रज्ञयाथात्म्यस्तुतिः | ४ |
| विशेषतः क्षेत्रयाथात्म्यकथनम् | ५—६ |
| अमानित्वादिज्ञानसाधनानां कथनम् | ७—११ |
| क्षेत्रज्ञयाथात्म्यकथनम् | १२—१७ |
| क्षेत्रक्षेत्रज्ञयाथात्म्यज्ञानफलकथनम् | १८ |
| प्रकृतिपुरुषयोरनादित्वप्रदर्शनम् | १९ |
| कार्यकारणकर्तृत्वे प्रकृतेरारम्भकत्वेन हेतुत्वस्य, पुरुषस्य सुखदुःखानां भोक्तृत्वे हेतुत्वस्य च कथनम् | २० |
| पुरुषस्य भोक्तृत्वनिमित्तकथनम् | २१ |
| पुरुषस्योपद्रष्टृत्वादिनिर्देशः | २२ |
| प्रकृतिपुरुषज्ञानफलकथनम् | २३ |
| आत्मदर्शने ध्यानाद्युपायविकल्पकथनम् | २४—२६ |
| सम्यग्दर्शनतत्फलयोः कथनम् | २७—३४ |


## चतुर्दशोऽध्यायः (४०९)


| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| उत्तमज्ञानोपदेशप्रतिज्ञा | १—२ |

| विषयक्रम. | श्लोकाङ्क |
|---|---|
| क्षेत्रक्षेत्रज्ञसंयोजनेन हिरण्यगर्भोत्पत्तिद्वारा सर्वभूतोत्पत्तिकथनम् | ३—४ |
| सत्त्वादिगुणानां जीवबन्धकत्वकथनम् | ५ |
| सत्त्वादिगुणस्वरूपकार्यादिप्रदर्शनम् | ६—१८ |
| सम्यग्ज्ञानस्य मोक्षहेतुत्वकथनम् | १९—२० |
| गुणातीतलक्षणप्रश्नः | २१ |
| गुणातीतलक्षणकथनम् | २२—२५ |
| अव्यभिचारभक्तियोगेन गुणातीतत्वादिसिद्धिकथनम् | २६ |
| आत्मनः सर्वप्रतिष्ठात्वकथनम् | २७ |

**पञ्चदशोऽध्यायः (४२५)**

| विषयक्रम. | श्लोकाङ्क |
|---|---|
| संसारस्य वृक्षरूपत्वकल्पना | १—२ |
| संसारवृक्षस्यासङ्गशस्त्रेण छेदने ब्रह्मपदप्राप्तिकथनम् | ३—५ |
| ब्रह्मपदलक्षणकथनम् | ६ |
| जीवस्य भगवदंशतया उत्क्रान्तिकाले इन्द्रियाकर्षकत्वादेश्च कथनम् | ७—९ |
| मूढानाम् आत्मज्ञानासंभवकथनम् | १०—११ |
| संक्षेपेण विभूतिवर्णनम् | १२—१५ |
| क्षराक्षरोत्तमपुरुषाणां निरूपणम् | १६—१७ |
| हेतुकथनपुरःसरं भगवतः पुरुषोत्तमत्वस्य तज्ज्ञानफलस्य च निरूपणम् | १८—१९ |
| भगवत्तत्त्वज्ञानप्रशंसा | २० |

**षोडशोऽध्यायः (४४०)**

| विषयक्रम. | श्लोकाङ्क |
|---|---|
| दैवासुरसंपदोः स्वरूपस्य फलस्य च वर्णनम् | १—५ |
| विस्तरेणाऽऽसुरसंपद्वर्णनतत्त्याज्यतयोः कथनम् | ६—२२ |
| शास्त्रविधिमुत्सृज्य प्रवृत्तस्य सिद्धयभावकथनम् | २३ |
| शास्त्रीये कर्मणि श्रीकृष्णकृतमर्जुनस्य प्रवर्तनम् | २४ |

**सप्तदशोऽध्यायः (४५२)**

| विषयक्रम. | श्लोकाङ्क |
|---|---|
| शास्त्रविधिमुत्सृज्य श्रद्धया कर्म कुर्वतो का गतिरित्यर्जुनस्य प्रश्नः | १ |
| श्रद्धात्रयविवरणम् | २—६ |
| त्रिविधाहारकथनम् | ७—१० |
| त्रिविधयज्ञकथनम् | ११—१३ |
| कायिकवाचिकमानसभेदेन तपसस्त्रैविध्यकथनम् | १४—१६ |
| सात्त्विकराजसतामसभेदेन तपसस्त्रैविध्यकथनम् | १७—१९ |
| सात्त्विकादिभेदेन दानस्य त्रैविध्यप्रदर्शनम् | २०—२२ |
| यज्ञादीनां साद्गुण्यायोतत्सदितित्रिनामत्रयस्य विनियोगप्रदर्शनम् | २३—२७ |
| अश्रद्धया हुतस्य हवनादेः सर्वकर्मणोऽसत्त्वप्रतिपादनम् | २८ |

**अष्टादशोऽध्यायः (४६४)**

| विषयक्रम. | श्लोकाङ्क |
|---|---|
| संन्यासत्यागयोस्तत्त्वविषयकः प्रश्नः | १ |
| संन्यासत्यागपदार्थोक्तिः | २ |
| कर्मणस्त्याज्यत्वात्याज्यत्वयोः सांख्यमीमांसकपक्षद्वयप्रदर्शनम् | ३ |
| फलासक्तिं त्यक्त्वा नित्यनैमित्तिकानि कर्माणि कर्तव्यानीति स्वमतप्रदर्शनम् | ४—६ |
| नित्यकर्मत्यागोपपत्त्यभावकथनपुरःसरं तामसादिभेदेन त्यागस्य त्रैविध्यप्रतिपादनम् | ७—९ |
| फलासक्तिं त्यक्त्वा नित्यकर्म कुर्वतो नैष्कर्म्यलक्षणज्ञाननिष्ठाप्राप्तिप्रतिपादनम् | १० |
| कर्मफलत्यागिनस्त्यागीत्यभिधानकथनम् | ११ |
| संन्यासिनामनिष्टादित्रिविधफलाभावकथनम् | १२ |
| सर्वकर्मणामधिष्ठानादिकारणपञ्चकवर्णनम् | १३—१५ |
| केवलात्मनि कर्तृत्वाभिमानिना दुर्मतित्वस्य कथनम् | १६ |
| कर्तृत्वाभिमानरहितस्य सुमतित्वकथनम् | १७ |
| कर्मप्रवर्तकज्ञानादित्रयस्य करणादित्रयस्य च प्रदर्शनम् | १८ |
| ज्ञानकर्मकर्तॄणां गुणभेदेन त्रैविध्यकथनप्रतिज्ञा | १९ |

| विषयक्रमः | श्लोकाङ्कः |
| --- | --- |
| सात्त्विकादिभेदेन ज्ञानकर्मकर्तॄणां त्रैविध्यप्रदर्शनम् | २०—२८ |
| बुद्धिधृत्योर्गुणभेदेन त्रैविध्यकथनप्रतिज्ञा, सात्त्विकादिभेदेन बुद्धिधृतिसुखानां त्रैविध्यकथनम् | ३०—३९ |
| संसारान्तर्गतस्य सर्वस्य त्रिगुणात्मकत्वकथनम् | ४० |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्मणां प्रविभागकथनम् | ४१—४४ |
| ब्राह्मणादीनां स्वस्वकर्मणा भगवदाराधनेन ज्ञाननिष्ठायोग्यतालक्षणसिद्धिप्रतिपादनम् | ४५—४६ |
| स्वधर्मस्यात्याज्यताप्रतिपादनम् | ४७—४८ |
| आसक्त्यादिरहितस्य संन्यासेन ज्ञाननिष्ठालक्षणनैष्कर्म्यसिद्धिप्रतिपादनम् | ४९ |
| केवलात्मज्ञाननिष्ठारूपनैष्कर्म्यलक्षणसिद्धिप्राप्तिक्रमकथनप्रतिज्ञा | ५० |
| विस्तरेण परज्ञाननिष्ठाप्राप्तिक्रमकथनम् | ५१—५३ |
| उक्तक्रमेण ज्ञानलक्षणभक्तिप्राप्तिकथनम् | ५४ |
| ज्ञानलक्षणभक्त्या भगवत्तत्त्वज्ञानसिद्धिकथनम् | ५५ |
| ज्ञाननिष्ठायामेतत्फलकस्य भगवद्भक्तियोगस्य स्तुतिः | ५६ |
| अर्जुनं प्रति श्रीकृष्णकृतो विवेकबुद्ध्या मयीश्वरे सर्वकर्मसंन्यासपूर्वकं समाहितबुद्धित्वाश्रयणेन सर्वदा मदभिन्नेश्वरे चित्तस्थापनोपदेशः | ५७ |
| अर्जुनं प्रति श्रीकृष्णकृतं मच्चित्तत्वे मत्प्रसादात्सर्वदुर्गतरणस्यान्यथा विनाशस्य च कथनम् | ५८ |
| अहंकाराश्रयणेन युद्धाकरणनिश्चयस्य मिथ्यानिश्चयत्वकथनपूर्वकमर्जुनस्य प्रकृतिपरतन्त्रत्वकथनम् | ५९—६० |
| ईश्वरस्यान्तर्यामित्वेन सर्वभूतप्रेरकत्वकथनम् | ६१ |
| सर्वभावेनेश्वराश्रयणेन शाश्वतपदप्राप्तिकथनम् | ६२ |
| उक्तगुह्यतरज्ञानविचारेणेच्छानुरूपकरणाज्ञा | ६३ |
| अर्जुनस्य परमप्रियत्वात्सर्वगुह्यतमवचनश्रवणप्रवर्तनम् | ६४ |
| गुह्यतमस्य कर्मयोगनिष्ठारहस्यस्येश्वरशरणतास्य कर्मयोगनिष्ठाफलस्य च सम्यग्दर्शनस्योपदेशः | ६५—६६ |
| अपात्रे शास्त्रोपदेशनिषेधस्य पात्रे तदुपदेशफलस्य च कथनम् | ६७—६९ |
| एतच्छास्त्राध्ययनश्रवणयोः फलकथनम् | ७०—७१ |
| मदुक्तगीताशास्त्रश्रवणेनाज्ञानसंमोहः प्रनष्टः कच्चिदित्यर्जुनं प्रति श्रीकृष्णप्रश्नः | ७२ |
| नष्टो मोहः स्मृतिर्लब्धेत्याद्यर्जुनोत्तरम् | ७३ |
| इत्यहं वासुदेवस्येत्यादि संजयभाषणम् | ७४—७८ |


इति श्रीमद्भगवद्गीताश्लोकान्तर्गतविषयाणामध्यायक्रमेणानुक्रमणिका ॥

====

# अथ शांकरभाष्यस्थविशेषविषयानुक्रमणिका ।

| विषयक्रम | पृष्ठाङ्क |
|---|---|
| **प्रथमोऽध्यायः ( १ )** | |


| विषयक्रम | पृष्ठाङ्क |
|---|---|
| श्रीमद्भगवद्गीताशास्त्रव्याख्यानस्य विघ्नोपशमनादिप्रयोजनसिद्धिद्वारा निष्पत्त्यर्थमपेक्षितप्रामाणिकव्यवहारप्रमाणकेष्टदेवतानत्यनुस्मरणरूपमङ्गलाचरणतपस्थे मनस्यनवशेषेणेतिहासपुराणयोर्व्याप्तिमस्य सितगीताशास्त्रैकवाक्यतामभिप्रेत्य भाष्यकारकृतमन्त्यर्थाभिविषयकपौराणिकश्लोकोदाहरणम् । | २ |
| स्वोत्पादितजगत्स्थित्यर्थं मरीच्यादीनुत्पाद्य वेदोक्तप्रवृत्तिलक्षणधर्मोपदेशपूर्वकं भगवत्कृतस्य तेषां तद्धर्मप्रवर्तनस्य सनकादीनुत्पाद्य वेदोक्तज्ञानवैराग्यलक्षणनिवृत्तिधर्मोपदेशपुरःसरं तेषां तद्धर्मे भगवत्कृतप्रवर्तनस्य च कथनम्, द्विविधवेदोक्तधर्मप्रयोजनकथनम् । | ३ |
| कालमाहात्म्येन कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगत्स्थितिपरिपालनेच्छया विष्णोर्ब्राह्मण्यस्य रक्षणार्थं देवक्यां वसुदेवादंशेनोत्पत्तिकथनम्, ब्राह्मण्यरक्षणेन वेदोक्तधर्मसंरक्षणोक्ति | ४ |
| भूतानुजिघृक्षया गीताद्वारा भगवता र्जुनाय वेदोक्तधर्मद्वयस्योपदेश इत्युक्ति, व्यासेन भगवदुपदिष्टधर्मस्य गीताख्यैः सप्तभिः श्लोकशतैरुपनिबन्धनं कृतमित्युक्ति | ५ |
| समस्तवेदार्थसारसङ्ग्रहभूतगीताशास्त्रस्य दुर्विज्ञेयार्थत्वात्तदर्थाविष्करणाय अस्य विवरणकारणस्य भाष्यकृत्प्रतिज्ञा | ६ |
| गीताशास्त्रस्य समासतो निःश्रेयसादिप्रयोजनकथनम् | ७ |
| शास्त्रस्य विषयप्रदर्शनम्, एतच्छास्त्रस्यानुबन्धत्रयविशिष्टत्वद्वयाख्येयत्वमित्युक्ति | ७ |


## अथ द्वितीयोऽध्यायः ( २१ )


| विषयक्रम | पृष्ठाङ्क |
|---|---|
| दृष्ट्वा तु पाण्डवानीकमित्यादि न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव हेत्येतदन्तग्रन्थस्य शोकमोहादिसंसारकारणाविद्यादिप्रदर्शनार्थत्वप्रदर्शनम्, सङ्गृहीतार्थविवरणम् | २५ |
| शोकमोहयोः संसारबीजत्वोपपादनम्, अशोच्यानित्यादिसदर्थस्य सर्वकर्मसंन्यासपूर्वकादात्मज्ञानादेव शोकमोहयोर्निवृत्तिरिति सहेतुसंसारनिवर्तकसम्यग्ज्ञानोपदेशे तात्पर्यमिति प्रदर्शनम्, सर्वलोकानुग्रहार्थमेवार्जुनाय ज्ञानं भगवतोपदिष्टमिति कथनम् | २६ |
| ज्ञापककथनयुतं श्रौतस्मार्तकर्मसहितज्ञानात्कैवल्यप्राप्तिरितिमतप्रदर्शनम्, हिंसादियुक्तत्वाद्वैदिकं कर्म धर्मायैवेत्याशङ्कानिरसनम् | २७ |
| समुच्चयपक्षस्य भगवदुक्तविभागवचनविरोधेनायुक्तत्वप्रदर्शनम्, साङ्ख्ययोगशब्दार्थकथनम् | २८ |
| भगवदुक्तविभागवचनस्य मूलत्वेन शातपथीयब्राह्मणस्य प्रदर्शनम् | ३० |
| समुच्चयपक्षे ज्यायसी चेत्कर्मणस्त इत्याद्यर्जुनप्रश्नानुपपत्तेर्विस्तरेण कथनम् | ३१ |
| पुनः प्रकारान्तरेण समुच्चयपक्षस्य मर्थेन निरसने | ३२ |
| केवलादेव तत्त्वज्ञानान्मोक्ष इति सिद्धान्तोपसंहार | ३४ |
| दृष्टान्तादिकथनपुरःसरं विकारासत्त्वप्रतिपादनम् | ४१ |

| विषयक्रमः | पृष्ठाङ्कः |
| --- | --- |
| आत्मनोऽप्रमेयत्वस्य शङ्कासमाधानाभ्यां समर्थनम् | ४६ |
| शङ्कानिरसनपूर्वकं विदुषः कर्मासंभवकारणकथनम् | ५१ |
| आत्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यासाधिकारप्रतिपादनम् | ५३ |
| शास्त्राचार्योपदेशशमदमादिसंस्कृतस्य मनस आत्मदर्शने साधनत्वकथनम् | ५५ |
| विदुषो ज्ञानेऽधिकारबोधनम्, मनसैवेति वचनात्सर्वकर्मसंन्यासाभावशङ्काया निरसनम् | ५६ |
| पुनः पुनरात्मनित्यत्वोक्तेः पौनरुक्त्याभावप्रतिपादनम् | ५९ |


## अथ तृतीयोऽध्यायः ( ९६ )


| विषयक्रमः | पृष्ठाङ्कः |
| --- | --- |
| संक्षेपेण द्वितीयाध्यायोक्तार्थस्यानुवादः | ९६ |
| गृहस्थस्य श्रौतस्मार्तकर्मसहितज्ञानात्कैवल्यप्राप्तिरितरेषामाश्रमिणां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानात्कैवल्यप्राप्तिरित्यस्य ज्ञानकर्मसमुच्चयवादिमतस्य निरासप्रदर्शनम् | ९९ |
| पापकर्मक्षयस्य ज्ञानोत्पत्तिहेतुकत्वे प्रमाणत्वेन ज्ञानमुत्पद्यते इति श्लोकोपन्यासः | १०८ |
| पञ्चसूनाकृतकिल्बिषाद्देवयज्ञादिनिर्वर्तनेन मुक्तिकथनम् | ११४ |
| यज्ञात्पर्जन्योत्पत्तौ ' अग्नौ प्रास्ताऽऽहुतिः ' इतिस्मृतिकथनम् | ११५ |
| अधिकृतस्याध्ययनादिद्वारा जगच्चक्रानुवर्तनरूपाज्ञातिलङ्घिनः प्रत्यवायोक्तिः | ११७ |
| सर्वस्य भूतवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कानिरासः | १२७ |
| भगवत्पदार्थवर्णनम् | १२९ |


## अथ चतुर्थोऽध्यायः ( १३४ )


| विषयक्रमः | पृष्ठाङ्कः |
| --- | --- |
| वर्णाश्रमादिकर्माधिकारो मृत्युलोक एवेतिप्रतिपादनम् | १४२ |
| कर्मण्यकर्मेत्यत्र श्लोके समभ्यन्तयोः कर्माकर्मपदयोर्नित्यकर्मानित्यकर्माकरणपरतया वृत्तिकारव्याख्यानस्य दूषणप्रतिपादनम् | १५० |
| शारीरं केवलं कर्मेत्यत्र शारीरपदार्थनिर्णयः | १५६ |
| ब्रह्मार्पणमित्यत्रार्पणादौ ब्रह्मदृष्टिविधिरिति पक्षमनूद्य दूषणकथनम् | १६१ |
| श्रद्धावत्त्वतत्परत्वसंयतेन्द्रियत्वसाधनानां समुच्चितानां ज्ञानेन सहैकान्तिकत्वप्रदर्शनपूर्वकं प्रणिपातादिसाधनस्य बहिरङ्गसाधनत्वप्रदर्शनम् | १७४ |


## अथ पञ्चमोऽध्यायः (१७८)


| विषयक्रमः | पृष्ठाङ्कः |
| --- | --- |
| तृतीये ज्ञानयोगकर्मयोगयोर्विभिन्नपुरुषानुष्ठेयत्वेनोक्तत्वेऽपि पुनः पञ्चमे कर्मसंन्यासकर्मयोगयोः प्रशस्यतरप्रश्नस्यार्जुनकृतस्य संगतिप्रतिपादनम् | १७८ |
| संन्यासकर्मयोगशब्दाभ्यां निःश्रेयसकरौ योगौ प्रकृत्य सांख्ययोगयोः फलैकत्वकथनमसंगतमिति शङ्कानिराकरणम् | १८७ |
| ' सर्वकर्माणि मनसा ' इत्यत्र ' नवद्वारे पुरे ' इति विशेषणप्रयोजनकथनम् | १९२ |
| सात्त्विकेषु राजसेषु तामसेषु च सत्त्वेषु समत्वदर्शनमनुचितमित्यस्याः शङ्काया निरसनम् | १९८ |


## अथ षष्ठोऽध्यायः (२०६)


| विषयक्रमः | पृष्ठाङ्कः |
| --- | --- |
| षष्ठाध्यायस्य पञ्चमान्तोपक्षिप्तध्यानयोगविवरणरूपत्वस्य प्रतिपादनम् | २०६ |
| कर्मयोगानुष्ठानस्य ध्यानयोगारोहपर्यन्तत्वमेवेति व्यवस्थापनम् | २०७ |
| फलेच्छां त्यक्त्वा कर्म कुर्वतः साग्नेः सक्रियस्य संन्यासित्वयोगित्वयोर्गौणत्वकथनम् | २११ |

| विषयक्रमः | श्लोकाङ्कः |
|---|---|
| नित्यानुष्ठानायासदुःखस्योपात्तदुरितफलत्वभावप्रतिपादनम् | ५२६ |
| आत्मज्ञानवदग्निहोत्रादीनां मोक्षे साक्षादन्वयो नेत्यत्र कारणप्रदर्शनम् | ५२८ |
| संघातेऽहंधियो मिथ्याधीत्वेऽपि न तत्कृतमात्मनि कर्तृत्वं किंतु—आत्मीये- ज्ञानेच्छाप्रयत्नैरस्य कर्तृत्वं वास्तवमिति मतमनूद्य तन्निरसनम् | ५३१ |
| संसारभ्रमस्य भ्रान्तिप्रत्ययनिमित्तत्वेन तस्य सम्यग्ज्ञानादेवात्यन्तोपरम इति सिद्धान्तप्रदर्शनम् | ५३८ |


इति श्रीमद्भगवद्गीताशांकरभाष्यविशेषविषयानुक्रमणिका समाप्ता ॥



ॐ तत्सद्ब्रह्मणे नमः।

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता—

# श्रीमद्भगवद्गीता

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता।

[ तत्रोपोद्घातारम्भः ]

हरिं मयि * विशिष्टार्थां कृपापीयूषवर्षिणीम्।
हेरम्ब देहि + प्रत्यूहक्ष्वेडव्यूहनिवारिणीम्॥ १॥

यद्वक्त्रपङ्केरुहसंप्रसूतं निष्ठाभृतं विश्वविभागनिष्ठम्।
साध्येतराभ्यां परिनिष्ठितान्तं तं वासुदेवं सततं नतोऽस्मि॥ २॥

प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः।
क्रियते शिष्यशिक्षार्थं गीताभाष्यविवेचनम्॥ ३॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतं निष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान्भाष्यकारो विघ्नोपशमनादिप्रयोजनप्रसिद्ध्यर्थं प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गलाचरणं संपादयन्ननवशेषेणेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति—

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥ १॥

नारायण इति। आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥

इति स्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः। सूक्ष्मदर्शिनः पुनराचक्षते—नरशब्देन चराचरात्मकं शरीरजातमुच्यते। तत्र नित्यसंनिहिताश्चिदाभासा जीवा नारा इति निरुच्यन्ते। तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति। यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यं मन्त्राम्नायं चाधीयते। तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति। ननु परस्याऽऽत्मनो मायासंबन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं

---

* विशिष्टः सर्वोत्तमोऽर्थो मोक्षरूपः प्रयोजनं यस्यास्ताम्। + प्रत्यूहरूपो यः क्ष्वेडव्यूहो विषसमुदायस्तन्निवर्तिकाम्।

---

१ च. गीतामृतं। २ ख. ग. च. °वः। ३ यदस्यायनं पू°।

च वक्तव्यमन्यथा कूटस्थासङ्गाविषयाद्वितीयस्य तदयोगात्, तथा च शुद्धतासिद्धौ कथं यथोक्ता परदेवता शास्त्रादावनुस्मर्यते। शुद्धस्य हि तत्त्वस्यानुस्मरणमभीष्टफलत्वमीष्टं तत्राऽऽह—परोऽव्यक्तादिति। अव्यक्तमव्याकृतं मायेत्यनर्थान्तरं तस्मात्परो व्यतिरिक्तस्तेनासंसृष्टोऽयं परः " अक्षरात्परतः परः " इति श्रुतेर्गृहीतः। तत्त्वतो मायासंबन्धाभावेऽपि कल्पनया तदीयसंगतिमङ्गीकृत्यान्तर्यामित्वादिकमुन्नेयम्। यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तस्मिन्नव्यक्ते साक्षिसिद्धेऽपि कार्यलिङ्गकमनुमानमुपन्यस्यति—अण्डमिति। अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिलप्यते। तदव्यक्तात्पूर्वोक्तादुत्पद्यते। प्रसिद्धा हि श्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिः। तथा च कार्यलिङ्गादव्यक्तादभिव्यक्तिरित्यर्थः। हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्यलिङ्ग*कमनुमानमस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति—अण्डस्येति। उक्तस्याण्डस्य हिरण्यगर्भाभिधानीयस्यान्तरिमे भूरादयो लोका विराडात्मका वर्तन्ते। कार्यं हि कारणस्यान्तर्भवति। तेन हिरण्यगर्भान्तर्भूतौ भूरादयो लोका विराडात्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थः। लोकानेव पञ्चीकृतपञ्चमहाभूतात्मकविराडात्मत्वेन व्युत्पादयति—सप्तद्वीपेति। " सा पृथिव्यभवत् " इति श्रुतौ विराजो जन्म संकीर्तितमित्यङ्गीकाराद्सप्तद्वीपेता पृथिवीत्यनेन सर्वलोकात्मको विराडेवोच्यते। चशब्देन विराजो हि हिरण्यगर्भे पूर्वोक्ताण्डात्मन्यन्तर्भावात्ततः संभवोऽनुकृष्यते। परमात्मा हि स्वाज्ञानद्वारा जगदशेषमुत्पाद्याऽऽत्मन्येवान्तर्भाव्याखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः। अत्र च नारायणशब्देनाभिधेयमुक्तम्। नरा एव नारा जीवास्तत्पदवाच्यास्तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म। तथा च कल्पितस्याधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्य कल्पितत्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वाद्ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते। तेनार्थाद्विषयविषयीभावः संबन्धोऽपि ध्वनितः। परोऽव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षो विवक्षितः। तेन च तत्कामस्याधिकारो द्योतितः। परिशिष्टेन तु वस्तुनो वास्तवमद्वितीयत्वमावेदितम्। तेन च वस्तुद्वारा परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्मनिष्ठायाश्चावान्तरविषयत्वमित्यर्थादुक्तमित्यवधेयम् ॥ १ ॥

ननु नैव साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते भूमिभारार्थितेन ब्रह्मणाऽभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन मध्यमं पृथासुतं प्रथितमहिमानं प्रेरयितुं धर्मयोरिहानूद्यमानत्वादतो नास्य शास्त्रस्य निष्ठाद्वयं परापेक्षविषयभावमनुभवितुमलमिति। तत्र भगवतो धर्मसंस्थापनस्वाभाव्यधर्मव्यावृत्त्यर्थद्वयस्थापना-

---

* क्षित्यङ्कुरादिकार्यं कर्तृजन्यं कार्यत्वादित्याकारकम्।

१ ख. ग. घ. °यन्धेऽपि। २ ख. ग. ङ. च. ज. °कं हिरण्यगर्भत°। ३ ख. ग. ङ. च. ज. °ता लो°। ४ ङ. परशब्देन। ५ क तुशब्देन प°।

र्थमेव प्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्य चाऽऽर्थिकत्वादर्जुनं निमित्तीकृत्याधिकारिणं स्वधर्मप्रवर्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति—स भगवानित्यादिना धर्मद्वयमर्जुनायोपदिदेशेत्यन्तेन भाष्येण ।

**स भगवान्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।**

तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्धारणात्तथाविधशास्त्रान्तरवदित्याशङ्क्य मङ्गलाचरणस्योद्देश्यं दर्शयन्नादौ शास्त्रप्रणेतुराप्तत्वनिर्धारणार्थं सर्वज्ञत्वादिप्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह—स भगवानिति । प्रकृतो नारायणाख्यो देवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितः । न च तस्यानाप्तत्वमीश्वरानुगृहीतानामाप्तत्वप्रसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः । ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं जगन्न व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावान्न च परस्यैवेश्वरस्य व्यवस्थापकत्वं वैषम्यादिप्रसङ्गात्तत्राऽऽह—तस्य चेति । सृष्टस्य जगतो मर्यादाविरहितत्वे शङ्किते तदीयां व्यवस्थां कर्तुमिच्छन्व्यवस्थापकमालोच्य क्षत्रस्यापि स्वत्वेन प्रसिद्धं धर्मं तथाविधमधिगम्य सृष्टवानित्यर्थः । सृष्टस्य धर्मस्य साध्यस्वभावतया साधयितारमन्तरेणासंभवात्तस्यैव तदनुष्ठातृत्वानभ्युपगमात्प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात्कुतस्तदीया सृष्टिरित्याशङ्क्याऽऽह—मरीच्यादीनिति । तेषां भगवता सृष्टानां प्रजासृष्टिहेतूनां यागदानादिप्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमुपपन्नमित्यर्थः । चैत्यवन्दनादिभ्यो विशेषार्थं धर्मं विशिनष्टि—वेदोक्तमिति । ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रति नियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात्तत्राऽऽह—ततोऽन्यांश्चेति । निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह—ज्ञानेति । विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो विवेकादि तस्य गमकमित्यर्थः ।

**द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । जगतःस्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानः । दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः**

---

१ ख. ग. च 'र्णयं' । २ ख ग च 'त्यदनुष्ठानायैव' । ३ ख ग घ 'स्याभ्यु' । ४ ख. ग च. 'जापतिसृ' । ५ क. ख. 'श्च । तनेको न' ।

स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

धर्मे बहुविदां विवाददर्शनाज्जगतः *स्थेम्ने कारणीभूतधर्मान्तरमपि स्पष्टमस्तीत्याशङ्क्याऽऽह—द्विविधो हीति । अतिप्रसङ्गप्रसङ्गव्यावृत्तये प्रकृतं धर्मं लक्षयति—प्राणिनामिति । प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुः, निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुः, निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः । ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वम् । ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तम् । यद्येवं धर्मो लक्ष्यते तर्हि वर्णिभिराश्रमिभिश्चापेक्ष्य सर्वैरेव पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयावित्यनुष्ठातृनियमासिद्धिरित्याशङ्क्याऽऽह— ब्राह्मणाद्यैरिति । अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्यालोचनयाऽनुष्ठानानियमसिद्धिरित्यर्थः । नित्यनैमित्तिकेषु यावज्जीवमनुष्ठानं काम्येषु करणांशे रागाधीना प्रवृत्तिरितिकर्तव्यतांशे वैधीति विभागेऽपि कदाचिदेवानुष्ठानमिति विभागमभिप्रेत्याऽऽह— दीर्घेणेति । अथ यथोक्तधर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्याऽऽदिकर्तुरनेकानर्थकलुषितशरीरपरिग्रहासंभवादन्यस्यैव कस्यचिदनात्मस्य वैषम्यनैर्घृण्यवतो निग्रहपरिग्रहद्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याऽऽप्तप्रणीतत्वं तत्राऽऽह— अनुष्ठातृणामिति । अथवा यथोक्तशङ्कायां दीर्घेणेत्यारभ्योत्तरम् । महता कालेन कृतत्रेतात्यये द्वापरावसाने साधकानां कामक्रोधादिपूर्वकादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च जगतो मर्यादाभेदे तदीयां मर्यादामात्मनिर्मितां पालयितुमिच्छन्प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामयं मायाशक्तिप्रयुक्तस्वेच्छाविग्रहं जग्राहेत्यर्थः । 'भौमस्य ब्रह्मणो गुप्त्यै वसुदेवादजीजनत्' इति स्मृतिमनुसृत्य पदद्वयमनूद्य व्याचष्टे—भौमस्येति । अंशेनेति । स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः । किलेत्यस्मिन्नर्थे पौराणिकी प्रसिद्धिरनूद्यते । न हि भगवतो व्यतिरिक्तस्येदं जन्मेति युज्यते बहुविधागमविरोधादिति भावः । ननु वैदिकधर्मसंरक्षणार्थं भगवतो जन्म, यदा यदा हि धर्मस्येत्यादिदर्शनात्, किमिदं ब्राह्मणत्वस्य रक्षणार्थमिति तत्राऽऽह—ब्राह्मणत्वस्य हीति । तथाऽपि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याशङ्क्याऽऽह—तदधीनत्वादिति । ब्राह्मणं हि पुरोधाय क्षत्रादि प्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनादतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः ।

---

* स्थेम्ने स्थित्यै ।

---

१ क. "न कृष्णः कि" । २ घ. "णे र" । ३ ख. ग. क. ञ. "विधाना वि" । ४ ख. ग. घ. "णीभवद्धर्मा" । ५ ङ. ञ. "न कृ" । ६ ख. ग. ङ. च. ञ. ब्राह्मण्यं ।

स च भगवाञ्ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्निव लक्ष्यते । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्याशङ्क्य ज्ञानादिकृतं विशेषमाह—स चेति । ज्ञानं ज्ञप्तिरर्थपरिच्छित्तिः । ऐश्वर्यमीश्वरत्वं स्वातन्त्र्यं, शक्तिस्तदर्थनिर्वर्तनसामर्थ्यं, बलं सहायसंपत्तिः, वीर्यं पराक्रमवत्त्वं, तेजस्तु प्रागल्भ्यमप्रधृष्यत्वम्, एते च षड्गुणाः सर्वविषयाः सर्वदा भगवति वर्तन्ते । तथा च तस्य शरीरादिमत्त्वेऽपि नास्मदादिसाम्यमित्यर्थः । अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतं जन्मादि संभवति, नहि भूतानामीशिता स्वतन्त्रश्चाऽऽत्मनोऽनर्थं स्वयमेव संपादयितुमर्हति । न चास्य देहादिग्रहे किमपि फलमुपलभ्यते तत्राऽऽह—त्रिगुणात्मिकामिति । सिसृक्षितदेहादिगतवैरूप्यसिध्यर्थमिदं विशेषणम् । तस्या व्यापकत्वं वक्तुं वैष्णवीमित्युक्तम् । ईश्वरपारवश्यं तस्या दर्शयति—स्वामिति । तस्याश्च प्रतिभासमात्रशरीरत्वमेव न तु वस्तुत्वमित्याह—मायामिति । तस्या नानाविधकार्याकारेण परिणामित्वं सूचयति—मूलप्रकृतिमिति । ईश्वरस्य प्रकृत्यधीनत्वं वारयति—वशीकृत्येति । नित्यत्वं कार्याकारविरहित्वं, शुद्धत्वमकारणत्वं बुद्धत्वमजडत्वं, मुक्तत्वमविद्याकामकर्मपारतन्त्र्यराहित्यम् । न च नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां भवन्तीति युक्तमित्याह—स्वभाव इति । देहग्रहे प्राधान्यं मायाया दर्शयितुं पुनः स्वमाययेत्युक्तम् । "स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमान." इति श्रुतिमाश्रित्याऽऽह—देहवानिति । इवकाराभ्यां देहादेरवस्तुत्वेन कल्पितत्वं द्योत्यते । धर्मद्वयोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसैतत्परत्वापादनं लोकानुग्रहः । यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणश्चायमीश्वरः स्वतो दृश्यते तथाऽपि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभावविपर्ययं प्रयातीत्यर्थः । ननु—'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादीश्वरस्याऽऽप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणां चाद्वैतवादे व्यतिरिक्तानामसत्त्वान्न धर्मद्वयमुपदेष्टुमुचितमिति तत्राऽऽह—स्वप्रयोजनेति ।

१ ख. ग. घ. ङ. 'र्या प्र' । २ ख. ग. च. ज. 'ति प्र' । ३ च. 'सप्तप्रयतात्वा' । ४ क. च. 'र्य पर्येती' ।

कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्रहेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याऽऽप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः। अर्जुनस्योपदेशापेक्षाऽस्तीति दर्शयितुं विशिनष्टि—शोकेति। ननु भूतानुग्रहे कर्तव्ये किमित्यर्जुनाय धर्मद्वयं भगवतोपदिश्यते तत्राऽऽह—गुणाधिकैरिति। प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्जुनायोपदिदेशेति संबन्धः। अथ सुगतोपदिष्टधर्मवदयमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वान्नास्य तत्तुल्यत्वमित्युत्तरमभिप्रेत्य शिष्टपरिगृहीतत्वाच्च मैवमित्याह—तं धर्ममिति। अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याऽऽह—सर्वज्ञ इति। 'कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुम्' इति स्मृतेः सज्जनोपकारकभगवदवतारत्वाच्च व्यासस्य नान्यथाबुद्धिरित्याह—भगवानिति।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्। तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि।

गीताशास्त्रस्यानाप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंहरति—तदिदमिति। पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिनष्टि—समस्तेति। शास्त्राक्षरैरेव तदर्थप्रतिपत्तिसंभवे किमिति व्याख्यानमित्याशङ्क्याऽऽह—दुर्विज्ञेयार्थमिति

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
*आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्॥

इत्यादिक्रमेणास्य शास्त्रस्य पूर्वाचार्यैर्व्याख्यातत्वात्किमर्थमिदमारभ्यते गतार्थत्वात्तत्राऽऽह—तदर्थेति। गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्रापेक्षितो न्यायश्चाऽऽक्षेपसमाधानलक्षणो वृत्तिकारैर्दर्शितस्तथाऽपि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयासमुच्चयवादिभिर्विरुद्धार्थत्वेनानेकार्थत्वेन च गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः। येषां प्राचीने व्याख्याने बुद्धिरप्रविष्टा तेषां संप्रतितन एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राऽऽह—विवेकत इति। पूर्वव्याख्याने तत्तदर्थनिर्धारणार्थो न्यायः संकीर्णवद्[6]भातीति न तत्र केषांचिन्मनीषा समुन्मिषति प्रकृते त्वसंकीर्णतया तत्तत्पदार्थनिर्णयोपयोगी न्यायो विविच्यते। तेनात्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः। किंचानपेक्षिताधिकग्रन्थस-

* आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्, एवमपि क्वचित्पठ्यते।

१ क. ज. 'थ समाग'। २ ख. ग. च. स्मृतेरर्जुनो'। ३ ख. ग. ङ. च. ज. 'शास्त्रस्य'। ४ क. 'श्चय'। ५ क. घ. 'र्थोपन्यास. धं'। ६ ख. ग. 'वद्भवती'।

अथात्र प्राचीने व्याख्याने श्रोतॄणां प्रवृत्तिरत्र त्वपेक्षिताल्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाऽऽह—संक्षेपत इति।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम्। तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति। तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—

"स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने" इत्यनुगीतासु।

तत्रैव चोक्तम्—नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी।
यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन्॥
'ज्ञानं संन्यासलक्षणम्' इति च।

इहापि चान्त उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति। अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसंधिवर्जितः। शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते। तथा चेममेवार्थमभिसंधाय वक्ष्यति—'ब्रह्मण्याधाय कर्माणि' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इति।

नन्वनाप्तप्रणीतत्वाभावेऽपि नेदं शास्त्रं व्याख्येयं विषयाद्य×नुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह—तस्येति। प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसि संनिहितस्य गीताशास्त्रस्य संक्षेपः संग्रहः संपिण्डितत्वमेकवाक्यत्वं तेनेदं परमं फलं यन्निश्चितं श्रेयो निःश्रेयसं कैवल्यम्, अवान्तरफलं तु तत्र तत्रावान्तरवाक्यभेदेन मनोनिग्रहादि विवक्ष्यते। निःश्रेयसं च द्विविधं—निरतिशयसुखाविर्भावो निःशेषानर्थोच्छित्तिश्च। तत्राऽऽद्यमुदाहरति—परमिति। द्वितीयं दर्शयति—सहेतुकस्येति। संसारोपरमस्याऽऽत्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं, तच्च स्वापमूर्छादिव्यवच्छेदार्थं विशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तम्। उक्तं फलं समुच्चितादेकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रतिपाद्यतेत्याशङ्क्याभिधेयमभिवर्तमानः समा-

---

× आदिपदेन प्रयोजनाधिकारिसंबन्धा गृह्यन्ते।

---

१ क. घ. °सु। किंचाप्यदपि त°। २ क. ख. ग. च. °भैवोक्त°। ३ ख. ग. च. न. चापि स्याच्छुभा°। घ. न चापि हि। ४ ख. ग. च. ज. झ. °रार्थबु°। ५ ख. ग. च. झ. °था च म°। ६ ग. ङ. ज. °त्वेनाभा°।

धत्ते—तथेति । आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठाऽत्रोच्यते । प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यत इत्यर्थः । ननु शेषिणी निष्ठा कुतो भवति न संन्यासात्, कर्मनिष्ठायाः शेषत्वात्तत्राऽऽह—सर्वेति । संन्यासद्वारेणासकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिध्यति शेषत्वं च कर्मणस्तत्र परम्परायत्तमित्यर्थः । ननु—'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति वाक्यशेषादसमुचितमात्मज्ञानमत्र न प्रतिपाद्यते नेत्याह—तथेति । सर्वकर्मसंन्यासपूर्वकमात्मज्ञाननिष्ठारूपं धर्मं निःश्रेयसप्रयोजनं प्रागुक्तं परामृशति—इममेवेति । वक्तृभेदादभिप्रायभेदाशङ्कां वारयति—भगवतैवेति । उक्तमनुगीतास्विति संबन्धः । ब्रह्मणः पदं पूर्वोक्तं निःश्रेयसं तस्य वेदनं लाभस्तत्र विशिष्टज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः । यज्ञदानादिवाक्यस्य तु तद्व्याख्यानावसरे तात्पर्यं वक्ष्यते । कर्मत्यागस्य भगवतोऽभिमतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति—तथैवेति । धर्माधर्मपूर्वाऽसंसर्गित्वे हेतुमाह—नैवेति । क्रियाद्वयसंबन्धाभावात्तालिवेर्त्यापूर्वाभ्यामसंबन्धे प्राप्तमर्थमाह—यः स्यादिति । वागादिबाह्यकरणव्यापारविरहित्वं तूष्णीमित्युच्यते । किंचिदचिन्तयन्नित्यन्तःकरणव्यापाराभावोऽभिमतः । द्विविधकरणव्यापारविरहितः सन्प्रागुक्तो योऽधिकारी केवलमेकस्मिन्नद्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाधिभागी स्यात्तस्यासंप्रज्ञातसमाधिनिष्ठस्य सर्वकर्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः । न केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किंतु प्रकृतेऽपि शास्त्रे समाप्त्यवसरे दर्शितमित्याह—इहापीति । नन्वत्र निवृत्तिलक्षणधर्मात्मकं ससंन्यासमात्मज्ञानमेव न प्रतिपाद्यते 'कुरु कर्मैव तस्मात्त्वम्' इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात्तत्राऽऽह—अभ्युदयार्थोऽपीति । ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाधिकारे विधानं देवादिस्थानप्राप्तिहेतुत्वेन मोक्षप्रतिपक्षत्वात्, सत्यम्, तथाऽपि फलाभिसंधिमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचनमित्याह—स देवादीति । फलाभिसंधिद्वारा कृतः सन्निति शेषः । प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याऽऽह—शुद्धेति । प्रतिपद्यते प्रागुक्तो धर्म इति शेषः । यदुक्तं फलाभिसंधिवर्जितमीश्वरार्पणबुद्ध्याऽनुष्ठितं कर्म बुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति—तथा चेति ।

इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद्विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रम् । यतस्तदर्थे विज्ञाते समस्तपुरुषार्थसिद्धिरित्यतस्तद्विवरणे यत्नः क्रियते मया ।

१ क. च. °शिष्टो ज्ञा° । २ ख. ग. च. नचेति । ३ क. घ. °रर° । ४ ख. ग. °रद्वी स° । ५ क. ग. °त्वादुद्दयो° । ६ क. °दर्थविज्ञानेन स° ।

शास्त्रस्य प्रयोजनं साधनमुक्तमनूद्य विषयं दर्शयति—इममिति। दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः संबन्धो विषयेण विषयविषयित्वमिति विवक्षित्वाऽऽह—विशेषत इति। एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति—विशिष्टेति। सिद्धे व्याख्यानयोग्यत्वे व्याख्येयत्वं फलितमाह—यत इति।

अत्र च—

एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्यमाह—अत्र चेति। गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासंबन्धप्रदर्शनपरे स्थिते सतीति यावत्।

अथ प्रथमोऽध्यायः।

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

तत्रैषाऽक्षरयोजना—धृतराष्ट्रो हि प्रज्ञाचक्षुर्बाह्यचक्षुरभावाद्युद्धमर्थं प्रत्यक्षयितुमनीशः सन्नभ्याशवर्तिनं संजयमात्मनो हितोपदेष्टारं पृच्छति—धर्मक्षेत्र इति। धर्मस्य तद्बुद्धेश्च क्षेत्रमभिवृद्धिकारणं यदुच्यते कुरुक्षेत्रमिति तत्र समवेताः संगता युयुत्सवो योद्धुकामास्ते च केचिन्मदीया दुर्योधनप्रभृतयः पाण्डवाश्च परे युधिष्ठिरादयस्ते च सर्वे युद्धभूमौ संगता भूत्वा किं कृतवन्तः ॥ १ ॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ॥
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

मामकीनं प्रबलं बलं प्रतिलभ्य वीरपुरुषैर्भीष्मादिभिरधिष्ठितं परेषां भयमाविर्भूत, यद्वा पक्षद्वयहिंसानिमित्ताधर्मभयमासीदेवेति युद्धादुपरमेरन्नित्येवं पुत्रराज्याशंसस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने संजयस्य प्रतिवचनम्—दृष्ट्वेत्यादि। पाण्डवानां भयप्रसङ्गो नास्तीत्येतत्तुशब्देन द्योत्यते। प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव। पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरतिधृष्ट-

---

१ ग. घ. ढ. च "शश्यामि"।

र्व्यूहाधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां संग्रामो-द्योगावस्थायामाचार्यं द्रोणनामानमात्मन. शिक्षितारं रक्षितारं च श्लाघयन्नुपसंगम्य तदीयं(स्य) समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसहितं वाक्यमुक्तवानित्यर्थः ॥ २ ॥

तदेव वचनमुदाहरति—

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

पश्येति । एतामस्मदभ्याशे महापुरुषानपि भवत्प्रमुखानपरिगणय्य भयलेशशून्यतयावस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहिताम् क्षोभ्यां पश्येत्याचार्यं दुर्योधनो नियुङ्क्ते । नियोगद्वारा च तस्मिन्परेषामवज्ञां निशामय-त्क्रोधातिरेकमुत्पादयितुमुत्सहते । परकीयसेनाया वैशिष्ट्याभिधानद्वारा परपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनं सुकरमिति मन्वानः सन्नाह— व्यूढामिति । राज्ञो द्रुपदस्य पुत्रस्तव च शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयं च शास्त्रास्त्रविद्यासंपन्नो महामहिमा तेन व्यूहभावमापादिताधिष्ठितामिमां चमूं किमिति न प्रतिपद्यसे किमिति वा मृष्यसीत्यर्थः ॥ ३ ॥

अन्येऽपि प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुपेक्षणीयत्वं परपक्षस्य विवक्षयन्नाह—

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अत्रेति । अस्यां हि प्रतिपक्षभूतायां सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशला भीमार्जुनाभ्यां सर्वसंप्रतिपन्नवीर्याभ्यां तुल्या युद्धभूमावुपलभ्यन्ते । तेषां युद्धशौण्डीरं(र्यं) विशदीकर्तुं विशिनष्टि—महेष्वासा इति । इषुरस्यतेऽस्मिन्निति व्युत्पत्त्या धनुस्तदु-च्यते । तच्च महदन्यैरप्रधृष्यं येषां ते राजानस्तथा विवक्ष्यन्ते । तानेव परसेनामध्य-मध्यासीनान्स्वपक्षानुरागिणो राज्ञो विज्ञापयति—युयुधान इत्यादिना सौभद्रो द्रौप-देयाश्चेत्यन्तेन । तेषां सर्वेषामपि महाबलपराक्रमभावत्वादनुपेक्ष्यत्वं पुनर्विवक्षति— सर्व एवेति ॥ ४ ॥ ५ ॥ ६ ॥

यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त संधिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्य ब्रवीति—

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

अस्माकमिति । तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति । ये खल्वस्मत्पक्षे व्यवस्थिताः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः । यद्यपि त्वमेव त्रैवर्णिकेषु त्रैविद्यवृद्धेषु प्रधानत्वाचा-न्प्रतिपत्तुं प्रभवसि तथाऽपि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि न त्वज्ञातं किंचित्तव ज्ञापयामीति मत्वाऽऽह—द्विजोत्तमेति ॥ ७ ॥

भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

तानेव स्वसेनानिविष्टान्पुरुषधौरेयानात्मीयभयपरिहारार्थं परिगणयति—भवानि-त्यादिना ॥ ८ ॥

द्रोणादिपरिगणनस्य परिशिष्टपरिसंख्यार्थत्वं व्यावर्तयति—

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अन्ये चेति । सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह—मदर्थ इति । यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति—नानेति । नानाविधान्यनेकप्रकाराणि शस्त्राण्यायुधानि प्रहरणानि प्रहरणसाधनानि येषां ते तथा । बहुविधायुधसंपन्नत्वेऽपि तत्प्रयोगे नैपुण्याभावे तद्वैफल्यमिति चेन्नेत्याह—सर्व इति ॥ ९ ॥

राजा पुनरपि स्वकीयभावे हेत्वन्तरमाचार्यं प्रत्यावेदयति—

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अपर्याप्तमिति । अस्माकं खल्विदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितं बलं भीष्मेण प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतो रक्षितं पर्याप्तं परेषां परिभवे समर्थम् ।

---

१ ख. ग. °नस्यानिषेधति । २ ख. ग. ङ. च. भ. °दर्पमिति ।

एतेषां पुनस्तदल्पं सप्तसंख्याकाक्षौहिणीपरिमितं बलं भीमेन चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तमस्मानभिभवितुमसमर्थमित्यर्थः । अथवा तदिदमस्माकं बलं भीष्माधिष्ठितमपर्याप्तमपरिमितमधृष्यमक्षोभ्यमेतेषां तु पाण्डवानां बलं भीमेनाभिरक्षितं पर्याप्तं परिमितं सोढुं शक्यमित्यर्थः । अथवा तत्पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं भीष्मोऽभिरक्षितोऽस्मै परबलनिवृत्त्यर्थमिति तदेव तथोच्यते, इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं भीमाभिरक्षितं भीमो दुर्बलहृदयो यस्मादस्मै परबलनिवृत्त्यर्थमभिरक्षितस्तस्मादस्माकं न किंचिदपि भयकारणमस्तीत्यर्थः ॥ १० ॥

स्वकीयबलस्य भीष्माधिष्ठितत्वेन बलिष्ठत्वमुक्त्वा भीष्मशेषत्वेन तदनुगुणत्वं द्रोणादीनां प्रार्थयते—

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

अयनेष्विति । कर्तव्यविशेषद्योती चशब्दः । समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते । सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति तेषु सर्वेषु प्रक्लृप्तं प्रविभागमपरित्यज्य भवान्भीष्मश्च कर्णश्चेत्येवमादयो भवन्तः सर्वेऽवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु । तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात्परबलनिवृत्त्यर्थत्वेन तस्यास्माभी रक्षितत्वादित्यर्थः ॥ ११ ॥

तमेवमाचार्यं प्रति संवादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तदन्तिकवर्ती पितामहस्तद्बुद्धचतुरोपायमित्थं कृतवानित्याह—

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

तस्येति । राज्ञो दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपराभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन्नर्थं तदीयमपानेनोपुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान् । किमिति दुर्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुलासन्नत्वात्पितामहत्वाच्चास्य दुर्योधनभयापनेयार्थो प्रवृत्तिरुचिता । तदुपजीवितया तद्वशत्वाच्च तस्य च सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथा संभाव्यते दूरादेवारिनिवहं प्रति भयजननलक्षणप्रतापवत्त्वादित्यर्थः ॥ १२ ॥

---

१ ख. ग. ट घ. ज. °भन र° । २ ख. ग. ङ ज. °स्रो नि° । ३ ख. ग. ट. च. ञ. तुमाद्दः । ४ क. °नयनार्था ।

